23

श्रीसरस्वती

अष्टमे वर्षे ] माघस्य पूर्णि

अखिल

# संस्कृ[...]र्योदयः ।

[...]घस्य पूर्णिमा सं० १९८६ । { अष्टम-संख्या

## सम्पादकीया अभिप्रायाः ।

—:○०○:—

### सनातनधर्मो देशसेवा च ।

—:०*०:—

[...]दानीं काले निखिलेष्वपि देशेषु प्रचलितानां विभिन्नधर्ममतानां सिद्धा-
[...]रेण क्रियमाणे विचारे देशसेवा-सम्बन्धे सनातनधर्मसिद्धान्त एव
[...]रीयान् विज्ञायते । देशसेवनरूपम् विराट्पूजनमन्तरेण न मनुष्यैः
निःश्रेयसाधिगमः कर्त्तुं शक्यते इति सनातनधर्मस्य निश्चलो
[...] स्वकीयं देशं संरक्षतः पुरुषस्य संग्रामे अन्यस्मिन् कर्मणि वा
निःश्रेयसाय कल्पते इति भगवान् मनुराह । तद् यथाः—

[...]द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।
[...]राड्-योगयुक्तश्च रणे चाभिमुखोहतः ॥

[...] व्यक्तिगतसमर्चया न यथातथ्येन शान्तिरधि-

सम्पादकः—

श्रीमान् अन्नदाचरणशर्मा तर्कचूडामणिः

[ महामहाध्यापकः, महामहोपाध्यायः ]

—०:*:०—

उद्गम-स्थानम्—

श्रीभारतधर्ममहामण्डलम्, ( जगतगंज ) काशी ।

वार्षिकं मूल्यं मुद्रात्रयम् ।

संरक्षकेभ्यः ५) असमर्थेभ्यःछात्रेभ्यः १)

विश्वविद्यालयसदस्येभ्यः ३) पुस्तकालयेभ्यश्च १)

…क।

… आदेयमस्ति। अत्र …
…, जैनधर्मज्ञानाथ …
…रां प्रशंसनीयं …
…स्थानम्—
…सोलापूर।

…स्मकं १)
…-वद
…काल-

…हाय
…प्लिकोषे"

…मोऽस्तु
…हान् विज्ञ…
…यालये [ पोस्ट
…नीआर्डर ) द्वारा
…णीयम्। अत्र विज्ञापन-
… सम्भावना। विज्ञापननियमाः पत्रं प्रेष्य ज्ञेयाः।
सूर्योदये मुद्रापणीयानि निबन्धादीनि तत्सम्बन्धीयपत्राणि, कार्यालय-व्यवस्थाविषयकदलानि च "श्रीमदवधेशप्रसादद्विवेदी व्यवस्थापक सूर्योदय कार्यालय जगतगंज, बनारसकैण्ट." इति सकेतेन प्रेषणीयानि।

---

कुरुक्षेत्रभूषण पं० छज्जूरामशास्त्रि कविरत्न-विद्यासागरकृतसंस्कृतपुस्तकानि।

न्यायसिद्धान्तमुक्तावली–मूलचन्द्रिकानामकपरीक्षोपयोगिटीकासहिता, मू० १॥)

साहित्यबिन्दुः—साहित्यशास्त्रे प्रवेशाय प्रथमं पुस्तकम्, मू० ॥)

न्यायदर्शनम्—परीक्षोपयोगि-वृत्तिसहितम्, मू० ॥)

दुर्गाभ्युदयनाटकम्–पं० नेकीराम–पण्डितरामकृष्णभट्टकृतटीकासहितमद्भुतम्, ॥)

प्राप्तिस्थानम्—पं० जगन्नाथ-लक्ष्मीनारायण-पुस्तकवाले बड़ादरीबा देहली।

---

23

# सूर्योदयः ।

अष्टमे वर्षे } माघस्य पूर्णिमा सं० १९८४ । { अष्टम-संख्या

## सम्पादकीया अभिप्रायाः ।

—:○○:—

### सनातनधर्मो देशसेवा च ।

—:०*०:—

इदानीं काले निखिलेष्वपि देशेषु प्रचलितानां विभिन्नधर्ममतानां सिद्धान्तानुसारेण क्रियमाणे विचारे देशसेवा-सम्बन्धे सनातनधर्मसिद्धान्त एव सर्वतो गरीयान् विज्ञायते । देशसेवनरूपम् विराट्पूजनमन्तरेण न मनुष्यैः कथञ्चित् निश्रेयसाधिगमः कर्त्तुं शक्यते इति सनातनधर्मस्य निश्चलो राधान्तः । स्वकीयं देशं संरक्षतः पुरुषस्य संग्रामे अन्यस्मिन् कर्मणि वा प्राणपरित्यागो निःश्रेयसाय कल्पते इति भगवान् मनुराह । तद् यथाः—

द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।
परिव्राड्-योगयुक्तश्च रणे चाभिमुखोहतः ॥

विहाय देशसेवां केवलया व्यक्तिगतसमर्चया न यथातथ्येन शान्तिरधिगन्तुं शक्यते इति आर्यशास्त्राणि प्रमाणयन्ति यथा च भागवते चतुर्थस्कन्धे—

अहं सर्वेषु भूतेषु भूतात्माऽवस्थितः सदा ।
तमवज्ञाय मां मर्त्यः कुरुतेऽर्चाविडम्बनम् ॥
द्विषतः परकाये मां मानिनो भिन्नदर्शिनः ।
भूतेषु बद्धवैरस्य न मनः शान्तिमृच्छति ॥
अथ मां सर्वभूतेषु भूतात्मानं कृतालयम् ।
अर्हयेद्दानमानाभ्यां मैत्र्याभिन्नेन चक्षुषा ॥

जीवभावो हि संकीर्णः स्वार्थपरतामयश्च वर्तते । क्रमोन्नत्या पशुयोनित एव मनुष्ययोनिरासाद्यत इति हेतोः साधारणतो मानवशरीरेषु पशुभावस्यैव प्राधान्यं निभाल्यते । इन्द्रियपरायणाः स्वार्थपराश्च वहवः पशवः स्वीयान् शिशून् एव कवलीकुर्वते । न क्षुद्रहृदयजीवैः महतो महीयान् आत्माऽधिगन्तुं शक्यते । महतः प्राप्तये हृदयेनापि महता भवितव्यम् ।

यावत् कालपर्य्यन्तं जीवः स्वीये व्यष्टिशरीरे एव ममताग्रस्तः निजशरीरसेवायाम् एव व्यग्रस्तिष्ठति तावत् कालपर्य्यन्तं न तस्य आत्मा महान् भवितुमर्हति न वा तस्य जीवस्य क्षुद्रतानाशपुरस्सरं ब्रह्मणा सह ऐक्यं भवति। निष्काम कर्मयोग द्वारा जीवः स्वीयां क्षुद्रसत्तां परित्यजन् निस्सीमब्रह्मसत्तया सह ऐक्यं प्राप्नोति। अतएव वेदेषु कर्मयोगः समुपदिष्टः। कर्मयोगो हि स्वराज्यप्राप्तेः बलवान् उपायः प्रधानो वा पन्थाः। निष्कामता स्वार्थसंकोचः परार्थे स्वसुखविसर्जनं चेत्यादीनामनुष्ठानं पारिवारिक राज्येष्वेव सर्वतः प्रथममावश्यकत्वमापद्यते। Charily wegive at home. इत्याङ्गलजनश्रुतिरपि पूर्वोक्तमेव सिद्धान्तम् समर्थयति। मनुष्यः एकस्मिन परिवारे वसन् स्त्री-पुत्रात्मीय-स्वजनादि-कृते स्वार्थपरित्यागं कर्त्तुं शिक्षते। कुटुम्बस्यैव सुखे सुखं दुःखे च दुःखम् इति अभ्यस्यतो जीवस्यान्तःकरणे स्वभावसुलभायाः स्वार्थपरतायाः संकोचः परमात्मभावसुलभायाः परार्थपरतायाश्च विकासो जायते। अयमेव हि परार्थपरताभावः क्रमशो ग्रामसेवायां प्रदेशसेवायां जातिसेवायां देशसेवायाञ्च यं मानवं नियोजयति स एव कर्मवीरः स्वदेशसेवक आम्नायते। प्राचीनायां रोमजातावपि देवतानिर्विशेषं कर्मवीरपूजनं प्रचलितमुपलभ्यते। Heroworship इति तदीयं नाम। आधुनिक यूरोपीयजातीयेष्वपि कर्मवीराणां वोभूयमानं सम्मानं निभाल्यते। इयं हि स्थूलायाः स्वदेशसेवायाः कोटिः। इतः परं धर्मसेवायाः कोटिः प्रारभ्यते। अत्र किल समस्तभूमण्डलनिवासिषु स्वधर्मावलम्बिषु प्रेम परधर्मावलम्बिषु द्वेषः समुत्पद्यते। माहम्मदमतावलम्बिषु इयं कोटिः परिदृश्यते। माहम्मदास्तु स्वधर्मानुयायिषु प्रेम प्रदर्शयन्ति, परधर्मावलम्बिनस्तु काफिर इति मान्यमानाः तद्वधेऽपि पुण्यमाकलयन्ति! खीस्तधर्मस्य तु तृतीया कोटिः। यत्र Duty to God and love to Men मानवमात्रस्योपरि प्रीतिः ईश्वरभक्तिश्च निर्दिष्टे। किन्तु वर्त्तमाने खीस्तजगति आदर्शोयं नामशेष एव दृश्यते। साम्प्रतिकाः खीस्तधर्मावलम्बिस्तु—

"परोपदेशे पाण्डित्यं सर्वेषां सुकरं नृणाम्।
धर्मे स्वीयमनुष्ठानं कस्यचित्तु महात्मनः"

इति संस्कृतलोकोक्तिं चरितार्थयन्ति। खीस्तानां स्वधर्म-स्वदेशप्रीतिस्तु परदेश-परजाति-पीड़नमेव प्रायो निर्विभर्ति। ते परकीयद्वेषद्वारा आत्मीयेषु प्रेम परिचाययन्ति। अतएव कारणात् यूरोपे स्वधर्मस्वदेशसेवया शान्तेरभावः द्वेषस्य च प्रबलः प्रकोपः। अनेन वोभूयमानः संग्रामो दुर्निवार एव।

अनन्तरमपि जैनवौद्धधर्मावलम्बिनां चतुर्थी कोटिः समापतति। तैस्तु मनुष्येषु मनुष्येतरपशुपक्षिकीटपतङ्गादिष्वपि प्रेम प्रदर्शयन्ति। अतएव ईश्वरसत्तास्वीकारमन्तरेणापि धर्मेऽत्र अहिंसामूलकं परमं प्रेम प्रतिष्ठितं निभाल्यते। माहम्मदाः ख्रीस्ताश्च मनुष्येतरान् प्राणिनः स्वभक्ष्यान् आमनन्ति। अतो हि जीवसेवाविचारेण माहम्मदखृस्तधर्मावलम्बिनां कोटिः जैनवौद्धधर्मावलम्बिनाम् अपेक्षया हीनैव परिगण्यते। सनातनधर्मस्य कोटिस्तु पूर्णा। निखिलेष्वपि जीवेषु ईश्वरसत्तामाकलय्य सर्वेषां परिरक्षणम् विश्वप्रीतिः भगवद्भावश्चेत्युभयोः सद्भावत्वात् सनातनधर्मकोटिः सर्वतः समुन्नतेति गीयते। अतएव सनातनधर्मावलम्बिनः कर्मयोगिनः जीवमात्रेषु प्रेम प्रदर्शयन्तः मनुष्यपशुपक्षिकीटपतङ्गवृक्षगुल्मलतादिषु भगवत्कलाम् अङ्गीकुर्वन्तः सर्वैरेव सार्धं स्वीयोदारहृदयसम्बन्धं स्थापयन्ति। लिखितमपि भागवते चतुर्थस्कन्धे—"मनसैतानि भूतानि प्रणमेत् बहुमानयन्। ईश्वरो जीवकलया प्रविष्टो भगवान् इति।" सिद्धान्तमिमनुसृत्य ते ब्रह्माण्डेषु कृतवासतव्यानां सर्वेषामपि जीवानामुपरि प्रीतिपरायणा परिदृश्यन्ते। प्रसिद्ध कर्मयोगस्य आध्यात्मिकसम्बन्धो समस्तभूतेष्वेव प्रतिष्ठते। यदा च सर्वतः परस्मिन् ब्रह्मणि स प्रतिष्ठितो भवति तदैव कर्मयोगिभिः यथातथ्येन पूर्णं स्वराज्यमधिगम्यते। पूज्यपादैः महर्षिभिस्तु 'स भवति स्वराट्' इत्यादि वेदवचनद्वारा तदेव स्वराज्यं स्वीकृतम्। श्रीमता भगवता मनुनापि अभिहितं मनुस्मृतौ द्वादशे अध्याये—

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।
समम्पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति॥

एतादृशं स्वराज्यमधिगत्य सिद्धा योगिनः निखिलमेव भूमण्डलं ब्रह्मरूपमवगच्छन्तः पूर्णां स्वतन्त्रतामनुभवन्ति। यथा चोक्तं भगवता शङ्कराचार्येण—

सम्पूर्णं जगदेव नन्दनवनं सर्वेऽपि कल्पद्रुमाः।
गाङ्गं वारि समस्तवारिनिवहः, पुण्याः समस्ताः क्रियाः॥
वाचः प्राकृतसंस्कृताः श्रुतिगिरो वाराणसी मेदिनी।
सर्वावस्थितिरस्य वस्तुविषया दृष्टे परे ब्रह्मणि॥

इदमेव आध्यात्मिकहृदयसम्बन्धत आर्यजातीयानां इतरजातीयेभ्यः परमं वैशिष्ट्यम्, एष एव देशसेवासम्बन्धेन अन्यधर्ममतापेक्षया सनातनधर्मस्य श्रेष्ठतायाः उज्ज्वलो दृष्टान्तः।

उपर्य्युक्तेन वर्णनेन सुस्पष्टमिदं सिध्यति यत् आर्यजातीयदेशसेवायां भौतिकविज्ञानस्यैव ( Material Science) समुन्नतिः न सर्वतः समभ्यर्थनीया । यद्यपि प्राचीने काले अर्थकामसम्बन्धीयान् समस्तान् अभावान् परिभावयितुम् आर्यजातीयैः भौतिकविज्ञानस्यापि चरमा समुन्नतिः संसाधिता तथापि तैराधुनिकपाश्चात्यजातिवत् भौतिकविज्ञानोन्नतिरेव समुन्नतिपराकाष्ठा नाङ्गीक्रियते ।

सर्वेऽपि पदार्थाः तावदेव नैरुज्यावस्थायां स्थातुमर्हन्ति यावत् तदीयपदार्थप्राणशक्तिसामञ्जस्ये न कापि हानिरुत्पद्यते । प्राणशक्तेरपव्ययेन तदीयसामञ्जस्ये हानिः बहुविधाः रोगाश्च जायन्ते । मनुष्यशरीरे प्राणशक्तिसमतायां प्रतिष्ठितायां वातपित्तकफप्रभृतिनां सामञ्जस्येन मानवशरीरं निरोगं तिष्ठति । ब्रह्मचर्यनाशेन परिश्रमाधिक्येन काम-क्रोध लोभ-मोह-मद-मात्सर्याद्यैश्च कारणकलापैः मानवप्राणशक्ति ह्रसते । वातपित्तकफादिधातुषु समुत्पद्यमानेन विकारेण शरीरं रोगस्तमल्पायुरपि भवति । व्यष्टिशरीरवत् समष्टिशरीरे ब्राह्मण्डेऽपि प्राणशक्तिर्वैविद्यते । तदीयसामञ्जस्येन ब्रह्माण्डशरीरान्तर्गतवातपित्तकफादिधातुनां समता सुरक्षिता ब्रह्माण्डशरीरं निरोगं करोति, देशकालानुसारेण ऋतुनां समयिकं परिवर्तनं शस्यादिसम्पत्तिवर्द्धनं प्रजासुखं दुर्भिक्षाभावं महामारीप्रभृतिमहारोगाणाम् अत्यन्ताभावञ्च जनयति । ब्रह्माण्डशरीरे विद्यमानप्राणशक्तिसमताराहित्ये सति ब्रह्माण्डशरीरव्यापकवातपित्तकफादयो विकृतिमापन्ना ऋतुविपर्य्ययम् अतिवृष्टिं अनावृष्टिं दुर्भिक्षान् महारोगांश्च जनयन्ति । पञ्चतत्त्वानां यादृशपरिणामेन वसुन्धरा सुफला जायते विराटपुरुषस्य स्थूलं ब्रह्माण्डशरीरं निरोगतामधितिष्ठति तत्रैव क्रियमाणेन वलात्कारेण महीयसी हानिः सम्पद्यते । यां गतिमनुसृत्य नदी समुद्रं गच्छति जगद्जीवनरक्षां वितनुते, यया गत्या वायुश्च संसारविधिविधानमनुतिष्ठति तत्र तत्र वोभूयमानवलात्कारद्वारा पञ्चतत्त्वानि महारोगान् प्रादुर्भाव्य जगतः अशान्तिदुःखदारिद्र्यपरिवर्द्धनाय परिकल्पन्ते । पञ्चतत्त्वेषु विद्यमानायाः ब्रह्माण्डप्राणरूपायाः वैद्युतिकशक्तेरपकर्षणेन ब्रह्माण्ड शरीरं निर्वलं भवति । पूर्वोक्ता बहुविधा हानयश्च समुत्पद्यन्ते । आस्तिक्यविहीनभौतिक विज्ञानोन्नतिः ( Godless Scientifc improvement ) ब्रह्माण्ड प्राणशक्तेरपक्षयं विदधती पञ्चतत्त्वेषु च वैषम्यम् ( Elemental disturbance ) उत्पादयन्ती महतीं हानिं कुरुते । अन्तर्निहित वैद्युतिक शक्तिसंकर्षणेन विराड्धातुषु समुत्पद्यमानो विकारः देशेषु संग्रामान्, दुर्भिक्षान् महारोगांश्च

विस्तारयति । संग्रामदुर्भिक्षमहारोगानामाविर्भावकाले तदीयं मूलं निदानं गवेषयद्भिः विपश्चिद्भिः आसुरशक्तिप्रयोगेण आसुरास्त्रप्रयोगद्वारा वा प्रकृतिराज्ये वैषम्यं पञ्चतत्त्वेषु समुद्भूयमानं विकारं चानुभवद्भिः पूर्वोक्तं कारणमनुमीयते ।

———

## ईश्वराभ्यर्थनम् ।

—०:※:०—

( क्रमागतम् )

त्वां वैष्णवा जगति विष्णुतनुं गणेशा-
कारं जना त्रिविधवेश ! गणेशदेवाः ।
शैवाः शिवाकृतिमुपाशत ईश सौराः
सूरस्वरूपमिह शक्तिमयं च शाक्ताः ॥
न त्वं पुमान् महितसन्महिमन् न च स्त्री
क्लीबश्च नो न च शिशुर्न युवा वृद्धः ।
भूतो न भावितमहो न च वर्त्तमानो
भावी न नोत्तमतमो न समोऽधमो नो ॥
न त्वं लघुर्न च गुरुर्न कृशो न पीनो
नाणुर्महान् न भगवन् न चलः स्थिरो नो ।
धर्मी च नो न कलुषी न सुखी न दुःखी
गुण्यो न दोषसहितो न च सन् न चासन् ॥
यादृग्विधं पशुपते तव रूपमन्तर्
ध्यायन्ति ये ननु जना भुवनेऽत्र भक्त्या ॥
तेषां मुदे विबुधवन्दितनन्दिताङ्घ्रे
तादृग्विधं वहसि तत्त्वमशेषमूर्त्ते ॥
सर्वेष्टदानजनिताऽद्भुतकीर्त्तिराशिः
कल्पद्रुमोऽपि भवदीयवदान्यभावम् ॥
लोकोत्तरं परमरम्यतरं निकामं
स्वान्ते विचिन्त्य भगवन् किमु लज्जते नो ॥
वृन्दारकैः सरसिजासनवृत्रशत्रु—
प्रेताधिपाम्बुपतिपुण्यजनेश्वराद्यैः ।

सम्मानिताऽभिलषिता जनताऽनुताप—
व्रातापहज् जयति देव दयालुता ते ॥
आश्चर्यकृद् वरदवर्य सुकार्यधुर्य
पर्यासिताखिलकदर्य सुरारिवर्य !
आर्याधिपाऽऽर्यनुत भान्त्यनिवार्यचर्य
धैर्यादयस्तव गुणा भृतभूरिशौर्य ॥
पङ्कोज्झितं प्रविलसद्ध्वनिभिः प्रशस्तैः
संशोभितं कविकुलैः परिकीर्त्तितं सन् ।
विश्वेश पुण्यजनजीवनदानदत्त
गाम्भीर्यभृद् विजयते खलु मानसं ते ॥
एकस्त्वमेव भगवन् निखिलाघहारिन्
आनन्दकन्द करुणाकर धर्मधारिन् ।
संसारदीर्घदरदारितमानसानां
क्लेशापहस्तनुभृतां सुखदः प्रसिद्धः ॥
इत्याशया परमदीनतमो नवीन·
प्राचानपातकविलीनमतिः स्वहीनः ।
त्रैलोक्यभीतिहरणक्षममक्षमोऽहम्
देव त्वदीयचरणं शरणं गतोऽस्मि ॥
ईशस्त्वमस्यतिमहन् अहमस्म्यनीशः
सार्यस्त्वमस्यजमहिन् अहमस्म्यनार्यः,
इष्टस्त्वमस्युदयवन् अहमस्म्यनिष्टः
शिष्टस्त्वमस्यघहरन् अहमसस्म्यशिष्टः ॥
नित्यस्त्वमस्ययि नयिन् अहमस्म्यनित्यः ।
सत्यस्त्वमस्यरिजयिन् अहमस्म्यसत्यः ।
इद्धस्त्वमस्यभय सन् अहमस्म्यनिद्धः
सिद्धस्त्वमस्यभिलसन् अहमस्म्यसिद्धः ॥
साक्षाच्छिवस्त्वमसि वीतशिवोऽहमस्मि
भूताधिपस्त्वमसि भूतमयोऽहमस्मि ।
मृत्युञ्जयस्त्वमसि मृत्युजितोऽहमस्मि
विश्वेश्वरस्त्वमसि विश्वमितोऽहमस्मि ॥
त्वं चासि भोः पशुपतिः पशुरस्म्यहं च

त्वं कामदाहकुशलोऽस्यहमस्मि कामी
सर्वज्ञतामसि गतस्त्वमहं जडोऽस्मि
त्वं शङ्करोऽस्यहमुमावर किङ्करोऽस्मि ॥
त्वं च त्रिलोचनतया लसितोऽसि शम्भो-
ऽहं च द्विलोचनतया कलितोऽस्मि शूलिन् ।
त्वं सम्मतो ह्यसि चतुर्भुजतासमेतो-
ऽहं सन्नतोऽस्मि भगवन् द्विभुजत्वयुक्तः ॥
पञ्चाननस्त्वमसि पञ्चशरासुनाशिन्
एकाननोऽस्म्यह मनेकगुणप्रकाशिन् ।
त्वं चाष्टमूर्त्तिरसि बालसुधांशुमौले-
ऽहं चैकमूर्त्तिरहिराजविभूषणास्मि ॥
त्वं चामरोत्तमतमोऽसि सुभोगभारो-
ऽहं पामरोत्तमतमोऽस्मि विभो विभोगः ।
त्वं चेडितोऽसि मृड पुण्यजनैः प्रसन्नः
संपीडितोऽस्म्यहमपुण्यजनैर्विपन्नः ॥
कल्याणद त्वमसि कल्पकृशानुवीर्यो-
ऽहं भूतिभासिततनोऽस्मि कृशाल्पवीर्यः ।
त्वं चौषधीश्वरकलासमलङ्कृतोऽसि
नानाऽऽमयैरहमये विकलीकृतोऽस्मि ॥
त्वं देवदेव विदितोऽसि परात्मसंज्ञो
जीवात्मतामुपगतोऽस्म्यहमुच्चधामन् ।
लोकोत्तरस्त्वमसि लोकपशोकहारिन्
लोकालयोऽस्यहमुदारविचाकारिन् ॥
न त्वत्समः सदयतासहितोऽस्ति लोके
नो मत्समः सदयतारहितोऽस्ति नाथ ।
न त्वत्समः परमसक्षमताश्रयोऽस्ति
नो मत्समः समधमाक्षमतालयोऽस्ति ॥
क त्वं क्व चाहमखिलेश तथाप्यभूद् यद्
सर्वार्थदा मम रति र्भवतः पदाब्जे ।
तत् पूर्वजन्मनि मयाविहितस्य भव्यं
कस्यापि भूरिसुकृतस्य फलं विभाति ॥

---

# पठनीयः पत्रव्यवहारः ।

—:*:—

बहुषु विषयेषु सत्यपि मतभेदे, महात्मा गान्धिमहोदयः सत्यसन्धो निष्कपट इति सर्वैर्मन्यते। स्वीयविश्वासे सुदृढमारूढेनापि तेन स्वीयं भ्रमात्मकं मतं सुस्पष्टमङ्गीकृत्य परिवर्तितम्। एषु दिवसेषु बहुवारं तेन इत्थमभिहितम् यत् "यदि सनातनधर्मावलम्बिनो विद्वांसः स्पर्शास्पर्शविषये मां बोधयेयुः, तदाऽहं स्वीयं विचारं नूनं परिवर्तयिष्यामि।" इत्यादि परिज्ञाय अनेके विद्वांसः तेन सार्धं विचार-विनिमयं विधातुं यरवदा-स्थाने गत्वा स्वमतमुपास्थापयन्; किन्तु समाचार-पत्रेषु एवं वारम्वारं विलोक्य यत् वास्तविको विचारो न जात इति महामहोपाध्यायः पण्डितश्रीगिरिधरशर्मा चतुर्वेदी महोदयः भावमिमं मनसि निधाय गत दिसम्बर मासस्य चतुर्विंशतितमे दिवसे महात्मनो गान्धिमहोदयस्य समीपे पत्रमेकं प्रहितवान्। तत्र तेन इदं लिखितं यत् "स्पृश्यास्पृश्यव्यवस्थां दूरतः परित्यज्य पवित्रधर्मस्थानेषु शास्त्र-मर्य्यादा-विरुद्धम् अस्पृश्यान् प्रवेशयितुं भवता यदान्दोलनमान्दोलितं तेन निखिलस्यैव सनातनधर्मावलम्बिनो मानवसमाजस्य चेतांसि चेखिद्यन्ते। भवता बहुवारं एतत् लिखितं यत् सनातनधर्म-विद्वांसः यदि मां बोधयिष्यन्ति तदाऽहं नूनं स्वीयं विचारं परित्यक्ष्यामि। अतो मया जिज्ञास्यते यत् भवन्तं बोधयितुं कः प्रकारो वर्तते ? भवान् प्रमाणाधारेण युक्तिवादेन वा बोधयितव्यः ? प्रमाणाधारेण चेत् तर्हि केषां ग्रन्थानां प्रमाणानि मान्यानि सन्ति ?" इत्यादि। एतस्य पत्रस्य प्रत्युत्तरं महात्मा गान्धिमहोदयः लिखति यत् "मया शास्त्र-प्रमाणं मन्यते। शास्त्राणां संख्या तु न ज्ञायते। न वा केनापि प्रकटिता। अतो मया सर्वतो भावेन गीतामातुः शरणमङ्गीकृतम्" इत्यादि। पत्रमिदं महात्मनो गान्धिमहोदयस्य ४-१-३३ तिथौ प्रहितमुपलभ्य पण्डितश्रीगिरिधरशर्मा चतुर्वेदी पुनरपि तत्प्रत्युत्तरं वृहत् लिखितवान्। तत्र तेन "गीतायां सूक्ष्मरूपेण मूर्त्तिपूजा, वर्णभेदः, जात्या चाण्डालत्वं, चाण्डालानां पातित्यं चेत्यादि विषया वर्णिता उपलभ्यन्ते" इति प्रदर्शितम्। चतुर्वेदिमहोदयेन तदर्थं प्रमाणान्यपि गीतातः समुट्टङ्कितानि। तेन गान्धिमहोदयसमीपे इदमपि लिखितं यत् "भवत्पक्षीयैः पण्डितप्रकाण्डैः 'ध्रुव' प्रभृतिमहोदयैः साकं मयाऽल्पज्ञेनाऽपि सता कृतः शास्त्रार्थरूपो विचारविनिमयः केषुचित्समाचारपत्रेषु प्रकाशितो भवता विभालनीयः! अनन्तरं भवतैव निर्णेतव्यम् यत् कस्य कथनं समीचीनमिति। पण्डितप्रवरस्य चतुर्वेदिमहोदयस्य एतादृशभावपूर्णं पत्रमधिगत्यापि महात्मना गान्धिमहाशयेन न किमपि उत्तरं प्रहितमिति भृशं दूयते चेतः।

———

# हेरम्बपञ्चकम् ।

ले०—श्रीविश्वनाथमिश्रः, साहित्यालङ्कारः ।

—०:❀:०—

अखिलभुवनमध्ये पूजनीयः सतां यः,
कलिकलुषतमिस्रं तिग्मरश्मिः पुनर्यः ॥
निजमहिमसुधांशोः पाययेद्रश्मिजालं-
मम हृदयचकोरं विघ्नराजो गणेशः ॥ १ ॥
जयति विदितवेद्यावेद्यसम्यग्विवेको,
जयति पुनरविद्याज्ञानमानापनोदी ।
जयति विबुधवन्द्यो भक्तचित्ते विहारी,
जयति जयति गौरीपुत्रकः पापहारी ॥ २ ॥
सदा स्तव्यो देवैर्मुनिजनसमूहैश्च सततं
जयत्यस्मिन् सम्यग्विधिहरिसमानो जगति च ।
जना नित्यं यस्य त्रिदिवपुरलङ्कारसदृशो-
ऽधिगम्याशीर्वादं जहति सकलान्दोषनिवहान् ॥ ३ ॥
प्रख्यातोऽपि बृहस्पतिः सुनितरां संसेवते स्वेऽङ्गणे-
ऽज्ञानध्वान्तनितान्तखण्डनकरं यं देवदेवं सदा ।
सिन्दूरेण विराजितं सुविपुलं भालं यदीयं भृशं
कुर्यान्मङ्गलमाशु मे स भगवान् गौरीशरीरोद्भवः ॥ ४ ॥
अज्ञानाम्बुनिधिप्रवाहतरणिः कामस्य चिन्तामणिः
विघ्नव्यूहतमोवृताध्वतरणिः क्लेशाघपुञ्जारणिः ।
भ्राम्यद्भूरिकुभावसिन्धुरशतप्रोद्दण्डशार्दूलको
ध्वान्तभ्रान्तनितान्तपान्थसरणिः पायादुमायाः सुतः ॥५॥

————

# संस्कृत-प्राचीनता ।

ले०—गङ्गाविष्णुशर्मा सारस्वतशास्त्री, ओ० टी० ।

( 'अलीपुर'स्थ राजकीय-विद्यालय-संस्कृताध्यापकः )

—:o:o❀o:o:—

अयि संस्कृत प्रणयिनो विद्वांसोऽन्तेवासिनश्च ।

विद्यालयीयप्रत्नमासिकपत्ररत्नानि श्रेणिव्यूहे ( फाइल ) यथाक्रमं निदधानस्तुरीयाब्दीयमासिकपत्रिकायां ( सेप्टेम्बर १६३० ) सुधायां दृष्टिपातमकार्षम्, तत्र तत्रभवतां श्रीमताम्, अक्षयवटमिश्र ( विप्रचन्द्र ) वर्याणां "संस्कृतकी प्राचीनता" इति शीर्षकात्मकं लेखं हिन्दीभाषाभूषितकलेवरमवालोकिषि, तमेव सुरभारत्यां विद्वज्जनमनोरञ्जनाय छात्रस्तोमज्ञानोपबृंहणाय चानूद्योद्दङ्क्ष्यामि—

साहित्यैव प्राचीनता-परिचायिका । विश्वस्मिन्नस्मिन् विश्वे प्राचीनतागौरवशालिनी न काऽप्यपरा भारती ऋते—संस्कृत्रिमाया वाच इति निश्चयप्रचम् । यतो हि प्रत्यक्षं प्रमाणं श्रीमन्तो वेदा विराजन्ते ।

लब्धोत्कर्षे भारतवर्षमेवाखण्डभूमण्डले पुरा सभ्यतामध्यगच्छत् । यदाऽखिला संसृतिरज्ञानतमस्ततिमहागर्ते निममज्ज, तदाऽपि सभ्यता-देदीप्यमानं मुकुटं भारतमस्तके न्यस्तमासीत् । यदेतरा जातयो नाक्षरविन्यासं कर्तुं न च मेध्यां वाचमालपितुमपपारंस्तदानीमपि भारतीयसभ्यजातयः साहितीविरचनायां पटिमानमासेदुः । हेतुनाऽनेनाऽनुमितिरियं प्रमाणकोटिमाटीकते, यदन्या जातयः भारतवर्षादेव सभ्यतामशिक्षिषत ।

महात्मनः क्राइस्टस्य ( Christ ) शैशवमपि किलाऽस्मिन् भारते व्यतीयाय । महात्माऽसावितोऽधिगतधर्मशिक्षः देशान्तरेषु धर्मचक्रस्य परिवर्तनं प्रावीवृतत् । विचारपूर्वकमनुसन्धानेन नाऽविदितं भवत्येतदितिवृत्तविदां विदां यत् खीरत ( खिष्ट ) धर्मे बौद्धधर्मस्य पूर्णः प्रभावो निपपात । इत्यपि निश्चलो राद्धान्तः, यद् भारतीयसंस्कृतभारत्याः प्रचुरः प्रभावो भाषासु परासु न्यपतत् । अतएव तत्तद्भाषासंज्ञाशब्दा देवगवीसंज्ञाशब्दसाम्यं दधति । कियन्तः शब्दास्तु संस्कृतव्याकृतिनियमप्रातिकूल्येन निष्पद्यन्ते । अस्तु, सम्प्रति मनाग् आङ्गलभाषामासाभिधानेषु दृष्टिपातो विधीयताम् ।

१ जनवरी ( सं० जन्यवरी ) जन्यानां सर्वप्राणिनां वरः समयः इति जन्यवरः, स विद्यते अस्मिन् इति जन्यवरी । अत्र णिनि प्रत्ययः । रूपाणि

तु गुणिन् शब्दवत् । तपसि ( माघे ) प्रायः पतत्येव माः ( मासः ) अयम् । शैत्येन सर्वे लोकाः सुखिनो वसन्ति, यथाऽभिलषितमभ्यवहरन्ति, घयन्ति, स्वपन्ति च ।

२ फेब्रुअरी-फरवरी, ( सं० फलवरी ) फलैः वरः फलवरः ( प्रकृत्यादिभ्य उपसंख्यानम् ) इति तृतीया, फलवरः समयः विद्यते अस्मिन् इति फलवरी। अत्राऽपि णिनिः । तपस्ये ( फाल्गुने ) एवाऽयं मास आगच्छति । अस्मिन् रसालप्रभृतयः प्रभूताः पादपाः प्रसूनैः फलैश्च परिपूर्णाः विलसन्ति ।

३ मार्च ( सं० मार्चः ) मायाः लक्ष्म्या अर्चा पूजा यस्मिन् स मासः मार्चः । लक्ष्मीरेवाऽत्र मा । 'इन्दिरा लोकमाता मा क्षीराब्धितनया रमा' । इत्यमरः । अस्मिन् मासे दुर्गा ( लक्ष्मीदेवी ) किलाऽर्च्यते । चैत्रे, सितेदले प्रतिपत्तः ( प्रतिपदायाः ) प्रभृति नवमीं यावन्नवरात्रोपक्रमः । एतस्मिन्नवरात्रे दुर्गायाः स्थापना पूजा च विधीयते । मधुमासे ( चैत्रेमासि ) मार्चमासः समागच्छति ।

४ अप्रिल-अप्रैल, ( सं० अप्रियलः ) अप्रियं सूर्यं लाति, आदत्ते इति अप्रियलः मासः । अस्मिन् मासि चण्डांशोश्चण्डता प्रतीतिमेति । तिग्मांशुरेवर्तुपरिवर्त्तननिदानमितिज्योतिःशास्त्रसम्मतं मतमेव । अयं मासः माधवे ( वैशाखे ) परापतति ।

५ मई-मे, ( सं० मायी ) माया विद्यते अस्मिन् इति मायी । णिनि प्रत्ययः । मासोऽयमापतति शुक्रे ( ज्येष्ठे ) मासे । उष्णरश्मेरत्युष्णतया सिकतामयप्रदेशेषु मृगतृष्णा ( मरीचिका ) नयनयोरयनमायाति । कुरङ्गाः सलिलभ्रान्त्या पिपासाऽपनुत्तये पलायमानाः कालकवलिता भवन्ति । अतएवाऽस्याऽभिधानं 'मायी' ( कपटपटुः ) समीचीनमेव ।

६ जून ( सं० युवन् ) शुचिमासे ( आषाढ़े ) अस्याऽभ्युपगमोऽस्ति । तपने नितान्तं तापो भवति । अतएव लोके लोकैरालोककरः ( दिनेशः ) युवाऽऽम्नायते ।

७ जुलाई ( सं० जीवलायी ) जीवान् लाति-आदत्ते इति जीवलायी । जीव ×ला× णिनिः कर्तरि 'आतो युक् चिण्कृतोः' इत्यनेन सूत्रेण युकि, उकारककारयोर्लोपे, ततः दीर्घे, सोर्लोपे, न लोपे च विहिते 'जीवलायी' इत्यस्य निष्पत्तिः 'स्थायी' वत् । मासोऽयं नभसि ( श्रावणे ) समभ्युपैति । वर्षर्तोरुपक्रमः जायते । असंख्यसंख्यातिगाः कीटपतङ्गोदय उत्पद्यन्ते । अतः 'जीवान् लातीति जीवलायी' त्यभिधानमस्य नाऽनर्थकम् ।

८ अगस्त ( सं० यज्ञास्तः ) यज्ञः अस्तः यस्मिन् सः यज्ञास्तः । अत्र वैयाकरणानां हृदि एकावसरः पदं निधत्ते, यत् 'अस्तः यज्ञः यस्मिन् सः अस्तयज्ञः' इति रूपं स्यात् परं 'राजदन्तः, आहिताग्निः, इत्यादीनां प्रचुर-प्रयोगयोगानां निर्णयसमकालमेव समेषां विद्वत्तल्लजानां संशोतिततयः कर्पूरायन्ते । प्रौष्ठपदे मासि ( भाद्रपदे ) अस्याऽऽगमः । तदा वर्षुकवर्षवर्षणेन ( वारिद्व्यूहवृष्ट्या ) आशुशुक्षणिः ( हुताशः ) निर्वाणतामृच्छति । अतो विस्तृतावनिस्थलानवाप्त्या सप्ततन्तवः समाप्नुवन्ति ।

९ सेप्टेंबर—सितंबर, ( सं० सप्ताम्बरः ) सप्त अम्बराणि यस्मिन् सः सप्ताम्बरः मासः । एष मासो मास्याश्वयुजि ( आश्विने ) एव भवति । एत-स्मिन् समये सघनजीमूताच्छादितं वियज्जायते । अतो गगनप्राचुर्यं प्रतीति-मेति । मासेऽस्मिन् हस्तनक्षत्राऽऽगमनेनाऽतिवृष्टिरपि जायते ।

१० आक्टोबर—अक्टूबर, ( सं० अर्कतोवरः ) अर्कतः सूर्यात् वरः श्रेष्ठः मासः । 'पञ्चम्यास्तसिल् कार्तिकिके मासे मासोऽयमायाति । तिग्मांशो-स्तिग्मता जायते । बाहुलमासस्य ( कार्त्तिकस्य ) आतपो विश्रुत एव ।

११ नवंबर ( सं० नवाबरः, नवाम्बरः ) नवानि अम्बराणि यस्मिन् सः । एकत्र 'शकन्ध्वादिषु पररूपं वाच्यम्' । अन्यत्र 'अकः सवर्णेदीर्घः'इत्यनेन दीर्घः । आग्रहायणिके ( मार्गशीर्षे ) मासि अस्याऽऽगमः । अतः शैत्यं निपतति । सर्वे मानवा नवानि वासांसि वेष्टन्ते ( परिदधति ) ।

१२ दिसम्बर,—( सं० दिशम्बरः ) दिक्षु अम्बराणि यस्मिन् सः 'दिश अम्बरः 'कुत्वाऽभावोनिपातनात् । मासेऽस्मिन् यत्र यत्र दृक्पातो विधीयते तत्र तत्र सर्वत्र वासांसि लोचनगोचरेतां यन्ति । सहस्ये ( पौषमासे ) मास-स्याऽऽगतिः । शैत्यस्याऽतिरेकेण वासःप्रयोजनीयता जायते । नीशार-( रजाई–दुलाई ) कौशेय ( दुशाला ) गात्रप ( कोट ) प्रभृति वसनजातं संस्थापितं सर्वत्र निभाल्यते । चैत्रप्रभृतयश्चान्द्रमासा लघीयांसो भवन्ति, तत्र ३५५ वासराणामेकं वर्षम् । ज्यायांसो वै भवन्त्याङ्गलमासाः । तत्र ३६५ घस्राणामेव वर्षम् । सङ्क्रान्तिक्रमेणाऽपि सौरमासीयं वर्षं बरीयः । एतेषां सौरमासानामाङ्गलमासानाञ्च परिपाट्या ऋतुपरिवर्तनं जायते । अत आङ्गलमासानामभिधानानि नितान्तं शुद्धानीत्यनल्पजल्पनेनाऽलम् ॥

———

# श्रीश्रीश्रीनेपालमहाराजाऽभिनन्दनम् ।

ले०-पण्डितशिवशङ्करझाशर्म्मा साहित्याचार्यः,
( वेद-व्याकरण-काव्य-धर्म्मशास्त्रतीर्थः )
"जनकपुरस्थ" राजकीय संस्कृतविद्यालयाऽध्यापकः ।

स्वस्ति प्रचण्डदोर्दण्डखण्डखण्डिताऽरिमण्डल-यशश्चन्द्रचन्द्रिकाद्योतविद्योतिताऽखिलजगन्मण्डल-दानशौण्डाऽर्थिकल्पपादपप्रभुवरमहाराजश्रीश्रीश्री युद्धसम्शेर राणावहादुर महोदयानां करकमलेषु —

श्रीकण्ठाऽऽश्लिष्टबाहुर्जलधर-रुचिरा यामुने मञ्जुकुञ्जे
पुञ्जे गोपाङ्गनानामविरतरमणाल-स्थलीना प्रवीणा ।
वीणावादप्रवीणैस्सुरमुनि-नकरैश्श्लोकिता ब्रह्मरूपा
भूपाला लाकृतिस्ते वितरतु कुशलं स्रग्धरा कृष्णमूर्त्तिः ॥ १ ॥

दृष्ट्वा यं खड्गहस्तं विचलितहृदयाः सम्पराये पराये
भीता नैवाऽऽद्रियन्तेऽधरमधु सुचिरं स्वालयेऽपि प्रियायाः ।
सोऽयं धीमानधीती नयरतिविनयी पुण्यकर्म्मा सुशर्म्मा
जीयाच्छ्री दमा-मृगाङ्कः पशुपतिशरणो "युद्धसम्शेरराणाः" ॥ २ ॥

विप्राः सत्कर्मपक्षाः श्रुतिविदितपथा मोक्षलक्ष्मीसमक्षाः
रक्षादक्षा विपक्षाऽक्षपितवलमदाः क्षत्रियामानदीक्षाः ।
भिक्षाभक्षास्समीक्षा-निवृतिपरतया साधवो लब्धलक्षाः
यस्मिन् क्षोणीश-सूर्य्ये विलसति भुवने नास्तिवादा विलक्षाः ॥ ३ ॥

लिङ्गान्यन्यानि हित्वा हिमगिरिसुतया यावनस्पर्श-भीत्या
शर्व्वः कालं प्रतीक्षन्नमरपरिवृढो विष्णुकार्य्याऽकरत्वात् ।
राज्ये यस्याऽधुना वै वसति पशुपतिः प्रीणयन् सर्व्वलोकान्
धर्म्मे स्तम्भायमानो जगति विजयते भू-बिडौजाः स राजा ॥ ४ ॥

कृत्ये यस्य प्रकृष्टेऽपरिमितधिषणो "मोहनो" जागरूकः
"व्यास"श्चाऽऽमोहकाले भवति कलनया 'धर्म्म" श्रद्धस्य बुद्धेः ।*

* टिप्पणी—अयमस्माकं प्रभुश्श्रीनेपालमहाराजो जिष्णुरर्जुनो वर्त्तते । तथाऽर्जुनस्य सर्व्वेषु विचारणीयकृत्येषु मोहनः श्रीकृष्णः सावधानोऽभवत्तथैव प्रभुमहाराजस्य सर्व्वविचारकार्य्येषु स्वर्गतमाननीयमहाराजचन्द्रसम्शेरराणामहानुभावस्य ज्येष्ठः पुत्रः सुगृहीतनामा श्रीमोहनसम्शेरो वर्त्तते । धर्म्मश्रद्धस्य-धर्म्मेयुधिष्ठिरे बद्धभक्तेरेकत्र धर्म्म सुकृते श्रद्धाभक्तिर्यस्य

सध्यूढ् "रुद्रो" रथस्थऽपरदलदलने "पद्मकेना"भिजुष्टः
"जिष्णु" र्देवः प्रतापी स भवतु न कथं ? "हेमराजा" श्रयेण ॥ ५ ॥
श्रीमँस्त्वत्कीर्त्तिहंसी परगुणपयसऽपानशीला विशाला
लब्धाऽऽवासाऽपि सूरैर्निपतति मुखतो मानसे नैवमान्ती ।
श्रुत्वैतत्कार्य्यजातञ्जनितदरतया दुग्धसिन्धुः पलाय्य
क्षाराऽकूपारपारं भजति ननु मया तर्क्यते हीदमेव ॥ ६ ॥
नोम्लानिं याति घस्रे न च विबुधगणैऽपीयते नाप्यपायी
मेघैरन्तर्न धत्ते युतसकलकलो राहुणा ग्रस्यते नो ।
वक्त्रैस्सीमन्तिनीनामतुलितसुषमऽन्नीयतेनाऽपि कुह्वां
राजँस्त्वत्कीर्त्तिचन्द्रो बुधमुखकमलं हर्षयत्येव नित्यम् ॥ ७ ॥
चातुर्व्वेदशिफोऽपवर्गफलको ज्ञानप्रसूनोर्जितः
शास्त्रव्रातविशुद्धवर्णविटपी कर्म्मर्द्धिपत्राऽऽकुलः ।
यस्मिन् शासति भूमिपालतिलके नेपालराजेऽधुना
मत्तैर्नैतृमतङ्गजैरपि मनाक् स्पृष्टो द धर्मद्रुमः ॥ ८ ॥
याऽऽसीद्गीर्व्वाणवाणि व्रततिरलघुभिर्ब्रह्मसायुज्यसस्या
पूर्णा विज्ञानपुष्पैः परिमलबहुला पालिता जीवनैश्च ।
तामेनां ग्लानवर्णां विलुलितकुसुमां मादृशां प्राणरूपां
म्लेच्छैरेतर्हि शीर्णामविदितशरणां पाहि पाहि प्रपन्नाम् ॥ ९ ॥
कथ्यं नैवाऽस्ति तथ्ये मम तव नृहरे ! पथ्यभूतेऽथकृत्ये
किञ्चोत्कण्ठा न कुण्ठा मुखरयति मुदा तद्ब्रुवे राजवर्य्य ।
त्रात्वैनामार्य्यजातिन्नृपतिकुलमणे मुग्धवात्या विघूर्णां
जीवं स्त्वं पुत्रपौत्रैः शिवभजनपरः सार्व्वभौमो भवेति ॥ १० ॥
प्रजास्ते सन्तु धर्म्मिष्ठाः शत्रवः पृष्ठदर्शकाः ।
भुवश्च सर्व्वसस्याढ्या ब्राह्मणाः कर्म्मठाः सदा ॥ ११ ॥

तथाऽर्जुनस्य यदा बुद्धिव्यामोहोभवतिस्म तदा व्यासः श्रीद्वैपायनोभगवान् भवति शिक्षार्थं-मितिशेषः तथैव महाराजस्य व्यामोहसमये कलनया विचारेण बुद्धेः व्यासः विकाशोभवति । अर्जुनरथोपरि जनकनन्दनीवरलब्धनवनिधिकः पद्मनामकेननिधिनायुक्तः श्रीहनुमान् रुद्राणामेकादश आसीत् । तथैवाऽधुना महाराजस्य सहायकः ( चीफ ) पदासीन श्रीमन्महनीय-रुद्रसमशेर राणामहाभागः, स्वर्गतमहाराज भीमसमशेरराणा महानुभावस्यपुत्रः श्रीपद्मसमशेर-महाशयेनसहितः प्रभुवरमहाराजस्य शत्रुवधेसाहाय्यमाचरति । अर्जुनो यथा उत्तरकुरून्विजित्य हेम्नां-राजातपनीय सुवर्ण कोव्याश्रयेणाजिष्णुर्जातः तथैव मम प्रभुरपि गुरुणासमेन हेमराजगुरुणा-विद्यावारिधिना जयति ।

# 'स्वराज्य'-शब्द-परिभाषा।

निबन्द्धा-श्रीदीनानाथशर्म्मा शास्त्री सारस्वतः।
( 'मुलतान'स्थ-श्रीसनातनधर्म्मसंस्कृतकालेजाऽध्यापकः )

एकदा एकस्मिन् पद्मसद्म-शोभाऽभिरामे आरामे कस्यचन देशिकवस्त्र-धारिणोऽपि वैदेशिकवेषमण्डितस्य, राष्ट्रवादिताऽभिमानिनोऽपि वैदेशिकभाषीयसम्वादपत्रपाठिनः पुरुषस्यैकस्य विद्यमानताऽसीत्। अत्रान्तर एव यदृच्छया ( आनुषङ्गिकं ) प्राच्यवेषमण्डितस्य धर्म्मवादिपण्डितस्यैकस्याऽपि तत्रोपस्थितिरभवत्। स खलु धर्म्मवादी पूर्वोक्तस्य राष्ट्रवादिमहाशयस्य नेदिष्ठे गत्वा शिष्टाचारोत्तरमित्थं तेन सह संवदितुमारेभे।

धर्म्मवादी—श्रीमन्! भवान् 'कोटपतलूना'दिके वैदेशिकवेषेऽपि देशिक-( खद्दर ) वस्त्रमुपयुञ्जानोऽद्यतनो राष्ट्रवादी प्रतीयते। तेनाऽहं तस्मिन्नेव सम्बन्धे किमपि * पिपृच्छिषामि। राष्ट्रवादिनां परमश्चरमश्च उद्देशः स्वराज्यमेव। तदर्थमेव ते आकाशपाताले एकीकर्त्तुम्बद्धपरिकरास्सन्ति, तत्कृत एव आमस्तकाद् आपार्ष्णेः स्वेदं स्रावयन्ति। परमहं 'स्वराज्य' शब्दपरिभाषाऽनभिज्ञोऽस्मि। किं 'स्वस्य राज्यम्' ईहन्ते राष्ट्रवादिनः? वर्त्तमानराज्यश्चाऽप × सिसारयिषन्ति? एष एवाऽर्थः स्वराज्यस्य? आहोस्विदत्र अन्या काचित् परिभाषा प्रचलति?

राष्ट्रवादी—हंहो पण्डितमहाशय! सत्यं मुग्ध एव भवान्। भवन्तो यथा खलु बाह्ये, तथैवाऽभ्यन्तरे। इदमेव मुग्धलक्षणम्। तदर्थमेव भवन्तः समयगतिन्न परिचिन्वन्ति। अत एव 'स्वराज्य' परिभाषाविषयेऽद्याऽपि विमुह्यन्ति भवन्तः।

धर्म्म०—स्वस्मै मुग्धतापदवीं वितीर्य्यमाणां श्रुत्वा भवतामेतद्वैपरीतीमनुमिनोमि। भवन्तः कदाचिन्मुग्धा न भविष्यन्ति। तर्ह्युच्यताम्; भवन्तः किं व्यपदेशभाजः?

राष्ट्र०—वयं चातुरीचणताव्यपदेशभाजः स्मः।

धर्म्म—( साश्चर्य्यम् ) अहो एवम्? तच्च चतुरतायाः किं लक्षणम्?

---

* पिपृच्छिषामि। सन्नन्तात् पृच्छतेः 'किरश्च पञ्चभ्य' इतीट्। 'रुदविदे'ति सनः कित्वात्सम्प्रसारणम्।

× सृधातुःषोपदेशेष्वुदरतः; तेनाऽत्र न षः।

राष्ट्र०—( स्मितस्मितः सन् ) श्रूयताम् । 'मनस्यन्यद् वचस्यन्यत् कर्म्मण्यन्यद्' येषाम्भवेत्; ये च समयप्रवाहं दृष्ट्वा तमनुचलेयुः, ते चतुरतालक्षणचर्च्चिताः ।

धर्म्म०—भविष्यत्येवम् । अस्तु प्रकृतमनुसरतु भवान् । 'स्वराज्य' परिभाषा वक्तव्या खलु ।

राष्ट्र०—ये खलु स्वस्य राज्यमिति स्वराज्यं मत्वा वर्त्तमानशासनपरिविवृत्सवः *, ते खलु मूढा एव । स्वराज्यस्य शुद्धा परिभाषा त्वित्थम्; यत् प्राचीनतायाः सनातनधर्म्मस्य तद्ग्रन्थानाञ्च विलोपनं तद्विरुद्धमेकान्तस्वातन्त्र्यप्रसारञ्च नाम अव्याप्त्यतिव्याप्त्यसम्भवादिदोषरहितं शुद्धस्वराज्यलक्षणम् । तत्प्राप्तौ तु वर्त्तमानराज्यमेव प्रबलं सहायकम् । यदि देशिकं शासनं स्यात्; तर्हि तत्र तु देशिकानां पुरुषाणां, देशिकानां ग्रन्थानां, देशिकस्य धर्म्मस्य, देशिकायाः × प्राचीनतायाः, देशिकाया भाषायाः, देशिकस्यैव संयमरूपपारतन्त्र्यस्य च प्रवर्त्तनं दुर्न्निवारं भविष्यति । तत्तु अस्मत्कृते महाभयावहमेव । तेन 'स्वराज्य'मिति लक्षणन्तु बहुविधदोषदुष्टमेव; तेन तत्तु अनादेयमेव ।

धर्म०—यदीदृश्येव परिभाषा स्वराज्यस्य; तदा भवन्तो वर्त्तमानशासनं कथं विरुन्धन्ति ?

राष्ट्र०—हंहो पण्डितमहोदय ! भवान् मुग्ध एव । प्रागेव मया कथितम्—'मनस्यन्यद् वचस्यन्यत् कर्म्मण्यन्यद्' ·················इति चतुरलक्षणम् । वयं यद् वर्त्तमानशासनविरोधमाचरामः तत्र कारणमन्यद् । तदेतद्-अस्मद्देशवासिनोऽद्याऽपि धर्म्मभक्तास्सन्ति । वर्त्तमानराज्येनाऽपि तेषां कृते 'विक्टोरिया' सम्राज्ञीसमये 'कस्याऽपि धर्म्मे हस्तक्षेपं न विधास्याम' इति नियम उद्घोषितः । वयमस्मै नियमाय रुष्टाः स्मः । परम्बहिᳵकथयितुन्न-शक्नुमः । अत एव अपदेशान्तरं कृत्वा वयं वर्त्तमानशासनं विरुन्ध्मः । इतश्चाऽस्माभिर्व्वैदेशिकताऽपदेशं वाह्ये प्रदर्श्य तेन ( वर्त्तमानशासनं ) विरुध्य च स्वदेशिका अपि स्वगृह्याᳵकरणीयाः । इत्थं वयमेकेन लोष्ठेन पक्षिद्वयं पातयामः । ततश्च वयं प्राचीनतोपासकानां हृदीमं विश्वासमप्युत्पिपादयिषामो यद्—वयं देशभक्ताः, वर्त्तमानशासनञ्च वैदेशिकम् । ते चाऽपि

* परिविवृत्सवः । सन्नन्ताद्वृत्तेः 'वृद्भ्यः स्यसनो' रितिपरस्मैपदपक्षे 'न वृद्भ्य' इतीण्निषेधे 'हलन्ताच्चे'ति किस्वेन लघूपधगुणाऽभावः । 'सनाशंसभिक्ष उः' 'अतो लोपः' ।

× देशिकायाः । 'अत इनिठनाविति मत्वर्थीयः ठन् । निमित्ताऽक्षत्वात्र ङीप् ।

'अन्धेनैव नीयमाना यथान्धा' मुग्धा अस्मानेव स्वदेशस्य स्वधर्मस्य च हितैषिणो मन्यन्ते । ततश्च यत्र तत्राऽस्मानेव नेतॄन् कृत्वा प्रह्विएवन्ति । + भवतश्च ये वस्तुत एव संस्कृतभाषादिपाठनरता देशिकताप्रचारकाः—घृणादृशाऽवलोकयन्ति । वयञ्चाऽपि भक्तमार्ज्जारीवत् तेभ्यो वृत्तीःप्राप्नुवन्तोऽपि तेषामेव धर्म्मे व्याघातमुपस्थापयामः ।

धर्म्मं—( साश्चर्य्यम् ) अहो ! वयं सत्यं मुग्धा एव स्मः । राष्ट्रवादिनामीदृशोऽभिप्रायोऽस्माभिर्नाभ्यूहितपूर्वः ।

राष्ट्र—भवन्तो मुग्धा एव न किन्तु मुग्धसमाः । किं न जानन्ति भवन्तो यद्-वयं यथा वैदेशिकशासनं * स्पृहयामः, न तथा भवन्तः । भवन्तस्तु वैदेशिकशासनाद् विरुद्धाः । तत्र प्रमाणमेतदेव-भवन्त आङ्गलैस्सह भोजनादिव्यवहारं न चिकीर्षन्ति, आङ्गलभाषां न पिपठिषन्ति, आङ्गलवेषभूषां नाऽनुचिकीर्षन्ति । आङ्गलसभ्यतां 'मनस्यन्यद् वचस्यन्यद्' इति लक्षणलक्ष्यभूतां नोरीकुर्व्वन्ति । संस्कृतभाषां प्रचार्य्य च भवन्त एव तु वस्तुतो देशिकतां समर्थयन्ति, न वयम् । नव्यसभ्यताविरुद्धञ्च भवतां मुखमण्डलं हृदयस्य दर्पणः । अस्माकन्तु मुखं हृदयस्य भावं न प्रकाशयति । वयमभ्यन्तरे कथन्न पापिनोऽपि भवेम, परं कस्य शक्तिर्यदस्मन्मुखाद् अस्मद्धार्दंपायमनुमातुमीशीत । अत एवाऽस्माकं वस्तुतो वैदेशिकशासनसर्थनरूपं हार्दं न कोऽपि वेदितुं पारयति ।

धर्म्म—विशकलय्यं प्रवक्तु भवान्; यत्-कथं भवन्तो वैदेशिकशासनसमर्थकाः ।

राष्ट्र—स्वराज्यस्य लक्षणमुक्तं प्राग्; यत्-स्वदेशीयतात्याग एव तत् ( स्वराज्यम् ) । तत्र च स्वयमेवाऽर्थादापन्नं भवति; यद् वैदेशिकतासमर्थका वयम् । यदि स्वदेशीयतासमर्थका अभविष्याम; तर्हि वैदेशिकशासनं † दवयितुं, प्रायतिष्यामहि; परं तथा तु न क्रियते, प्रत्युत वैदेशिकशासनात् स्वाऽधिकाराःप्रेप्स्यन्ते × । ते च ईदृशाः; यद्-वयं व्यवस्थापकपरिषत्सु

+ भवतः इति शसि रूपम् ।

* शासनं स्पृहयामः । अत्र कर्त्तुरीप्सिततमत्वात् कर्म्म । सम्प्रदानता तु 'स्पृहयतेरीप्सिते' एव भवति; नत्वीप्सिततमत्वे ।

× दवयितुम् । दूरं कर्तुम् । दूरशब्दात् 'तत्करोती' ति णिचि तस्य 'प्रतिपादिकाद्धात्वर्थे' इतीष्ठवत्त्वाऽतिदेशात् 'स्थूलदूरे' ति यणादिलोपे पूर्वस्य च गुणोऽवादेशे सनाद्यन्तत्वाद् धातुत्वे तुमुनि दूरि रूपम् ।

† प्रेप्स्यन्ते । प्राप्तुमिष्यन्ते । सन्नन्तादादाप्नोतेः 'आप्ज्ञप' इत्य च ईत्वे अभ्यासलोपे कर्मणि लट्टि सनोऽतो लोपे रूपम् ।

प्रविश्य स्वेच्छाऽनुरूपान् नियमान् प्रवर्त्तयामः। यदाऽस्मदीयेनैव 'शारदा' महोदयेन तत्र धर्म्मशास्त्रविरुद्धविवाहवयोनिर्द्धारनियमो निर्म्मापितः; तस्मिन्नेव दिनेऽर्द्धं स्वराज्यमस्माभिरधिगतमासीत्। भवन्त एव सन्ति वैदेशिकताविरुद्धाः। युष्माकमेवाऽयं सिद्धान्तः--'म्लेच्छदेशे न वस्तव्य' मिति। परं भवन्तो म्लेच्छनृपतिविरुद्धा अपि एतदर्थं तं न विरुन्धन्ति, यत् तेन सनातने धर्म्मे हस्ताऽऽक्षेपाऽविधानमुद्घुष्टम्। वयञ्चैतदर्थमेव तं विरुन्ध्मो यत्तेनाऽयं नियमः कथमुद्घुष्टः। यद्यस्मै शासनाय वयं न स्पृहयेमः, किन्तु स्वदेशिकतायै एव स्पृहयेमः, तर्हि या मृतभाषा संस्कृतव्यपदेश्याऽस्माभिर्घृणादृशा वीक्षिता; वैदेशिकभाषा च प्रेम्णा समाश्लिष्टपूर्व्वा; तद्विषयककृतप्रयत्नो मोघतां स्प्रक्ष्यति, पुनरेव संस्कृतभाषाऽध्ययनमनिवार्य्यम्भविष्यति। भवन्त इदं न विविश्चन्ति; यदि वयं स्वदेशिकतासमर्थकाः स्याम; कथं तर्हि संस्कृतभाषां न प्रचारयाम; कथन्न प्राचीनवेषमुररीकुर्य्याम। वाक्कीला निवेदनपत्रलेखकाश्च ( Petition-writers ) वयमेव। अभियोगादिकार्यं जनानुत्साह्य तेषामेव द्रव्यैर्वर्त्तमानशासनस्य साहाय्यमाचरामः; स्वयमप्युदरम्भरयो भवामः। यत्तु 'खद्दर' प्रचारणमस्माकं तत्तु नाममात्रेणैव। वयं विस्मृत्याऽपि स्वदेशिकशर्करां स्वदेशिकवेषभूषाञ्च नोपयुञ्ज्महे × मृन्मयं * देशिकं दीपं त्यक्त्वा विदेशीयान् प्रदीपानुपयुञ्ज्महे; देशिकोपानहो घृणाऽर्हा मत्वा 'बूट' धारणं कुर्म्महे; प्राचीनशाटिकां विहाय 'पतलूना' दिकं परिदध्महे; देशिका ओषधीरुपेक्ष्य वैलायतिकौषधिं निषेवामहे; देशिकमसीस्त्यक्त्वा इङ्गलेण्डीयाभिरेव ताभिर्लिखामः; प्राचीनं शौचविधिमुत्सार्य्य—

"द्वित्रैश्च कर्गलैः पश्चाद् गुदं संशोधयेद् बुधः।
न करेण स्पृशेन्नीरं यदीच्छेच्छुभमात्मनः॥"

इति 'टुडे स्मृत्य' नुसारञ्च आङ्गलमर्य्यादां धारयामः। अस्मदीयशिरसि आङ्गलरीत्या केशानामर्द्धनंकर्त्तनं तु भविष्यति; परं सुपरिगवेषणेनाऽपि स्वदेशिकशिखास्थापनं न लप्स्यते। किं बहुना देशिकप्रचारणे केवलं 'खद्दर' स्यैवाऽऽडम्बरं कुर्म्महे; इतरत्तु सर्व्वं वैदेशिकमेव। तदपि 'स्वराज्य' प्राप्तौ अर्थात् प्राचीनधर्म्माऽवसादे सति त्यक्ष्यतेऽस्माभिः; यतः स्वाऽधिकाराणां प्राप्तौ सत्यां न कोपि विरोधः स्थास्यति वर्त्तमानराज्येन नः।

× उपयुञ्ज्यहे। रौधादिकयुजेः 'स्वराद्यन्तोपसर्गाद्' इतितङ्।
* मृण्मयम्। 'स्वादिष्वसर्वनाम' इति पदान्तत्वात् 'पदान्तस्य' इतिणत्वनिषेधः। तेन 'मृण्मयम्' इति न साधु।

धर्म्मं—साधु। स्वदेशिकधर्म्मविद्रोह एव वैदेशिकताऽङ्गीकार एव च स्वराज्यत्वे पर्य्यवसितः। निजधर्म्मकर्म्मणां स्वाहाकार एव स्वराज्यान्दोलनमिति निर्गलितोऽर्थः। प्राचीनतापराचीनता (पराङ्मुखता) एव च स्वराज्यस्य प्राणाः। अस्तु—पुनरपि भवान् विशदय्याभिधत्ताम्; यदीदृशेन स्वराज्येन के के लाभा भवितुमर्हन्ति; कीदृशी च प्राचीनतापराचीनता (पराङ्मुखता) ऽभिमता।

राष्ट्रवादी—श्रूयताम्। प्राचीनतायां ब्राह्मणानामुच्चसिंहासनम्; अस्मिन् स्वराज्ये तु अब्राह्मणानामेव; विशेषतोऽन्त्यजानाम्। तत्र प्राचीनस्मृतीनां प्रामाण्यम्; अत्र तु 'टुडेस्मृति' × प्रभृतीनाम्। अथवा किं बहुना-निष्कर्षोऽयम्, यं भवन्तो 'धर्म्योऽयम्' इति कथयिष्यन्ति, वयं तद्विरुद्धमेव प्रवर्त्स्यामि इति स्वराज्यस्य सारः। अधुना वैशद्येन श्रूयताम्—यावद् धर्म्मशास्त्राणामेकोऽपि ग्रन्थःपन्थाश्च सनातनो, ब्राह्मणानाञ्चैकाऽप्याज्ञा अवशिष्टा स्थास्यति; तावत् स्वराज्यमप्राप्तं ज्ञयम्। अत एवाऽधुना स्वराज्यप्राप्तेस्सरलोपायोऽयम्; यद्—धर्म्मशास्त्रग्रन्था जले निमज्जनीयाः; अग्नौ वा दग्धव्याः; भूमौ वा निखननीया; पुस्तकालयकपाटेषु वा पिधातव्याः। स्वराज्यस्य लाभा द्रष्टव्याः-अधुना ब्राह्मणमुहूर्त्ते उत्थाय निद्रा न विहन्तव्या भवति; शीतकाले स्नातव्यन्न भवति; कस्यचिद् ग्रन्थस्य कथने बन्धव्यं न भवति; सन्ध्यावन्दने विधिर्नोपासनीयो भवति। एवमन्यदपि स्वयमुन्नेयम्। वयं यान् वैदेशिकशासननियमान् (कानून) वाह्ये स्वशत्रूनभिदध्मः; तैरेवैषां प्राचीनग्रन्थानां वहिष्कारं कारयिष्यामः; यतस्त एव तु 'कानून' पदव्यपदेश्या नियमा अस्माकम् 'अमोघब्रह्माऽस्त्रस्थानीयाः। तैरेव 'विवाहोच्छेदविल' प्रभृति नियमान् स्वीकारयिष्यामः। तर्हि कथं वयं वैदेशिकशासनाद् विरुद्धाः?

धर्म्म—श्रीमता उक्तम्, भवन्तःप्राचीना यं धर्म्मं वदयन्ति; वयं तद्विरुद्धं प्रवर्त्स्यामः, इदमेव स्वराज्यम्। कृपया विवरणं विधेयमत्र।

राष्ट्र—निशम्यताम्। भवन्तो यज्ञोपवीतादीनां * धारणे आग्रहिलाः। परं ते तु स्वराज्यस्य विस्फोटकाः। तेषां स्थाने वयं 'पतलून' स्तम्भनाऽर्थं चर्म्मपट्टं परिवेष्टयिष्यामः। भवन्तो दुकूलधारणपराः, वयञ्च 'नकटाई'

× इयं नवीना स्मृतिरस्याभिः 'सूर्योदय' स्य सप्तमाऽब्दीयनवमसंख्यायां प्रकाशिता।

* भवन्तः स्त्रीणामुपवीतविधिं न कुर्व्वन्ति; वयञ्च ताभिरेवोपवीतं धारयिष्यामः।

नामकगलवन्धं धारयिष्यामः। भवन्तो मूर्त्तिपूजका देवालयगमने धर्म्मं मन्वते; वयन्तु न तथा; प्रत्युत प्रवलं तद्विरोधमाचरामः। भवन्तोऽस्पृश्यानां देवमन्दिरप्रवेशधर्मं मन्वते; वयञ्च तदर्थमेव आन्दोलनं कुर्म्मः। तदर्थं स्वाऽनभीष्टानपि देवालयान् गच्छामः; अस्पृश्यानपि तत्र गमयामः। प्रत्युत मन्दिरे तेषामनिवार्य्यप्रवेशाय व्यवस्थापकपरिषत्सु नियमानपि निर्म्मापयामः। वस्तुतस्त्वेतदस्माकं व्याजमात्रमेव, यद्—यद्यस्पृश्या देवमन्दिरं न प्रवेशयिष्यन्ते, तर्हि ते यवना भविष्यन्ति। मूढा लोका अस्माकं धर्म्मविनाशन स्येमां नीतिं न ज्ञातुं पारयन्ति। अथ चाऽस्पृश्या देवमन्दिराणां गमने प्रवलमुत्कलिकाकुला अपि न सन्ति; वयमेव तदर्थं तानुत्साहयामः। अन्यथाभावे यवनसम्बन्धं तेषामाख्याय जनान् भीषयामहे हिन्दुसङ्ख्यान्यूनतामपदिश्य। वस्तुतस्तु ते वृत्त्यभावादेव यवनान् सम्बध्नन्ति। 'भङ्गी' नामधेयानामुच्चाकाङ्क्षाऽप्रवृद्ध्यं तेषां मलाऽपकर्षणवृत्तिम्, चर्मकाराणाञ्च देशिकोपानहो घृणास्पृशा दृशा वीक्ष्य च तेषां चर्म्मवृत्तिमपसारयितुं वयमेवोद्यताः स्मः। यवनास्तेऽमीभिरेव कारणैर्भवन्ति; परं वयमन्धाँल्लोकान् देवमन्दिराद्यप्रवेशकारणमेव प्रदर्शयामः। तेऽप्यविवेकिनो मन्वत एतत्। तदर्थञ्चोद्यता अपि भवन्ति। अभिप्रेतमस्माकं सिद्ध्यति धर्म्मविनाशनस्य। गान्धिना व्रतं कृतं प्रयोजनान्तराय; प्रयोजनञ्च स्वकीयं साधितमस्माभिः। तदिदम्—अस्पृश्यस्पर्शनं स्नानकारणमापततिस्म, शीतकाले च तेन महती बाधा भवतिस्म। ग्रीष्मेऽपि कार्य्यान्तरे व्याघातो भवति स्म। अधुनात्वान्दोलनेन स व्याधिर्नष्टप्रायः। तर्हि स्नानाऽविधानेन यावत् कूपजलं रक्षितम्; तदेवाऽस्पृश्या विरोधे भवत्यपि सति अस्मदान्दोलनवलाद् युष्माकं कूपेभ्यो निष्कास्य स्वोदन्यां शमयिष्यन्ति; वयं शीताद्रक्षिताः समयनाशाच्चाऽपि। अन्यद् दृश्यताम्—भवन्तः संस्कृतपाठशाला उद्घाटयन्ति; वयन्तु 'लार्ड मैकाले' इत्यस्य शिष्यायमाणा धर्म्मकर्म्ममर्य्यादाभङ्गाय प्राचीनसंस्कारप्रत्यादेशाय च आङ्गलशाला आविर्भावयामः। भवन्तो धर्म्मं धर्मं इति क्रन्दन्तः सुखाद्वञ्चिता भविष्यन्ति; वयञ्च स्वेच्छाचारितामुपासीना आनन्दमग्ना भविष्यामः। भवन्तो ब्राह्मणाय दानप्रदानं धर्म्मं मन्वतेः वयं नवीनान्दोलनानि प्रतिवर्षं जनयित्वा स्वयमेव दानरूपकाणि सङ्गृह्य उपांशूदरसात् करिष्यामः। चक्षुष्मन्तोऽपि अन्धा अन्धपरम्परापरा नरा अधुनात्वस्मभ्यमेव दानप्रदानाय उत्कलिकाकुलास्सन्ति; न युष्मभ्यम्। अस्पृश्यान् * पण्यशालाऽध्यक्षताऽ

* अस्पृश्यान्..........कारयिष्यामः। 'हृक्रोरन्य-'इत्यणौ कर्तुः कर्म्मत्वं णौ।

कारयिष्यामः। स्वयञ्च मलाऽपकर्षणं विधास्यामः। भवन्तो देशिकचर्म्म-कारैर्निर्म्मिता उपानहः परिधाय चर्म्मकाराणां वृत्तिवर्द्धने सहायका भवन्ति; वयन्तु आङ्गलदेशनिर्म्मिता 'डासबूट' इति विख्याता उपानहः परिधाय तेषां वृत्त्यपसारणे सहाया भविष्यामः। यूयं या मर्य्यादास्त्यजथ; वयं ताः सहर्षमूरीकरिष्यामः। भवन्तो वर्त्तमानशुद्धिविरुद्धाः; वयन्तु तदर्थमाकाश-पाताले मेलयिष्यामः। यूयमस्पृश्यान् + स्पृष्ट्वा स्नानाऽऽदि-'शुद्धिं' विधा-स्यथ; वयञ्च तां 'शुद्धि' मेवाऽस्पृश्यां मंस्यामहे। भवन्तोऽवतारवादसम-र्थकाः; वयं तद्विरुद्धाः। यूयं गान्धिप्रभृतीन् नाऽऽद्रियध्वे; वयं तानवतार-रूपान् मंस्यामहे। यूयं श्राद्धमन्तारो वयञ्च तत्खण्डकाः। यूयं श्राद्धे ब्राह्मणभोजनं विधापयथ; दक्षिणाश्च तेभ्यो दत्थ; वयमस्पृश्यानेव भोजयिष्यामो दक्षिणाश्च वितरीष्यामस्तेभ्यः। भवन्तः प्राचीनपरम्परा भविष्यन्ति; वयञ्च नव्यप्रवाहे प्रवक्ष्यामः। भवन्तो महिलाऽवगुण्ठनस्य पक्षपातिनः; वयन्तु तासां कोमलाऽङ्गीनामवगुण्ठनमपसार्य्य तदीयलावण्यदत्तदृष्टयोऽमन्दमानन्दं प्राप्स्यामः। भवन्तश्शिखां लम्बयिष्यन्ति; वयं काकपक्षान् (जुल्फें) धार-यिष्यामः; शिखायाः समूलोच्छेदं करिष्यामः। यूयं तिलकाऽङ्कितललाट-तटा भविष्यथ; वयं सीमन्तं तत्स्थानीयं विधास्यामः। भवन्तः स्वधर्म्मशास्त्रेषु स्त्रीणां पदं लघयिष्यन्ति; वयं ता एव नेत्रीर्विधास्यामः; प्रत्युत वयं स्वयं स्त्रीयिता भविष्यामः; श्मश्रुकूर्च्चान् क्षुरेण वप्स्यामः। बहवो मुग्धाः स्वरा-ज्यस्य 'स्वं राज्य' मित्याशेरते; परं नैवम्। राज्यमस्माकं वर्त्तमान 'गवर्नमेण्टस्य' स्यात्। आम् पौराणिकेभ्यो गलग्रहो मुच्येत; इदमेव स्वरा-ज्यम्। द्रष्टव्यम् अस्माभिः पुराणेभ्य ईदृशी घृणा कारिता; यत्—कोऽपि तत्प्रमाणश्रवणं न मृष्यति। इत्थं वयमेकैकां शास्त्रस्य धर्म्मस्य च शृंखलां यथासमयं शनैश्शनैः क्रमशो भ्रंशयिष्यामः। वयमेव पारम्परिक-विघटन-पटवः स्मः; नाम वर्त्तते वर्त्तमान 'गवर्नमैण्ट' स्य भेदपाटवे; परं स्मो वयं तादृशाः। वयं मातृः पितृन् भ्रातॄन्, अन्यसम्बन्धिनः, समानजातिकान्, समानधर्म्मणश्च भिन्नान् कारयिष्यामः; परमस्पृश्यांस्तु अभिन्नान् सम्बन्धि-निर्व्विशेषान् एवं करिष्यामः। अस्माकमीदृशः प्रवाहश्चलति; यद्—अस्म-द्विरुद्धं यः कोऽपि व्याख्यानमञ्चे बिभाषिषेत ❀ अस्मदीयाः 'उपविश्य-ताम् २' इति कोलाहलं कृत्वैव तमुपवेशयन्ति; अत एव कश्चिदपि न साह-

+ युष्माभिरस्पृश्या अस्पृष्टाः कृता; वयन्तु युष्मानस्पृश्यान् करिष्यामः।
❀ विभाषिषेत। भाषितुमिच्छेद्। 'पूर्व्वंस्सन' इतितद्।

समाधत्ते। यदि कश्चिदाधत्तऽपि साहसम्; तर्हि वयं तं वृश्चिका भूत्वा दशामः; सर्पा भूत्वा कदर्थयामः, अग्नयो भूत्वा दहामः। यं विधवा-विवाहं स्मृतिविगर्हितममंसत भवन्तः; तमेव वयं प्राचालयामः। किं बहुना प्राचीनता-पराचीनतै (पराङ्मुखतै) व स्वराज्यम्—इति स्वराज्यपरिभाषा-मध्यवस्यतु भवान्। केवलमियमेव न नव्या परिभाषा नः; अस्माकमन्या अपि परिभाषा नूनं ज्ञेयाः। तथाहि—नेतृत्वं नाम शास्त्राऽवमन्तृत्वम्, देश-भक्तिर्नाम सनातनधर्म्मद्वेषः, औदार्य्यं नाम शास्त्रविरुद्धं पानभोजनम्, समदृष्टिर्नाम नीचानामेवोन्नमनम्, विद्या नाम परप्रतारणम्, कर्म्म नाम पापस्य प्रच्छन्नमाचरणम्, वीरत्वं नाम सदाचारपरित्यागः, त्यागो नाम परकीयधनाऽऽधिपत्यम्, संस्कारो नाम समाजस्थितिभङ्ग इत्यादि †

धर्म्म—भवन्त ईदृग्विचारवतस्समाजान् सम्प्रदायान् वा पृथक् कथं न निर्म्मान्ति ? कथं राष्ट्रसभां प्राविक्षन् भवन्तः।

राष्ट्र—तत्र कारणं श्रूयताम्। अस्माभिः प्राग् ईदृक्षास्समाजाः स्थापिता एव। तेषां चिरस्थापितानामपि साफल्यं नाऽनुभूतमस्माभिः। लोकास्तान् (समाजान्) स्वशत्रूयिताञ्जानन्ति। तैरस्मदभीप्सितो धर्म्म-नाशस्तथा न जातः। व्याघ्रेण तथा कार्य्यं न सिद्ध्यति; यथाहि गोचर्म्म-प्रतिच्छन्नेन तेन (व्याघ्रेण); विषेण तथाऽभीप्सितनाशो न जायते; यथाहि अमृतव्याप्तेन तेन। द्रष्टव्यम्—व्याघ्रस्य अवरङ्गजीवस्य समये तु आर्य्य-धर्म्मलोपस्तथा न जातो यथाहि अद्यत्वे गोरूपधराणामस्माकं समये जायते। राष्ट्रीयसंस्था च लोकविश्वास्या जाता; अतएव तामेव द्वारीकृत्य यथा धर्म्ममर्म्माणि कर्त्तितानि स्युः; न तथा नवीनसंस्थाभिः। अतएव तत्रैवाऽस्माभिः प्रविष्टम्। तत्सहायतयैव इदानीमास्माकीने सर्व्वत्र प्रसृते जालजाले मुग्धा जिज्ञासुमृगाः स्वयमागत्य आपतिष्यन्त्येव। यदैवञ्जनान् स्वगृह्यान् विधास्यामः; तदा राष्ट्रवादिताकञ्चुकं परिहाय पुनरेव स्वकीयान् समाजान् प्रविश्य तेषां बलं कन्दलयिष्यामः। अधुना हे धर्म्मवादिन्! त्वं धर्म्मस्य अङ्गभङ्गमङ्ग! जातमेव विद्धि। युष्माकं प्राचीनतारविरचिल-म्बितमेवाऽस्ताचलमौलिमुपैष्यति। युष्मत्कृतेन अधुना तस्य रक्षाऽसम्भवैव। यतो देशभाषादिप्रचारणेन वास्तविकदेशभक्ता अपि भवन्तोऽस्माभिर्लोक-दृष्टिभ्यो निपातिता एव।

धर्म्म—इतः पञ्चषेभ्यो वर्षेभ्यः पूर्व्वं भवद्भिः कुतो न धार्म्मिक-क्रान्ती × राष्ट्रसभातश्चक्रे ※ अधुनैव कथं प्रारब्धा सा ?

---

† इमाः परिभाषाः परित्यक्तमहामहोपाध्यायपदवीकैः श्रीपञ्चाननतर्करत्नभट्टाचार्य्यैः प्रकटिताः स्ववक्तृतायाम्।

× ........क्रान्ती राष्ट्र.........'रोरी' तिरलोपे 'ढ्रलोपे' इति दीर्घे च रूपम्

※ भवद्भिः........चक्रे। कर्म्मणि लिट्। 'भावकर्म्मणो' रितितङ्।

राष्ट्र—तदाऽस्माभिरियं सभा लोकविश्वास्या करणीयाऽऽसीत्। अथ च ततोऽपि पूर्व्वं तत्र तिलकादीनां प्राचीनतोपासकानां साम्राज्यमभ्यविद्यत। ते राष्ट्रसभायां धार्मिकविषयं प्रविवेशयिषन्त्येव न स्म। तेभ्यो भयादपि वयं कमठा इव स्वाङ्गानि तदा समकोचयाम।

धर्म्म—किमधुना गान्धिप्रभृतयः प्राचीनधर्म्माणस्तत्र न सन्ति; पुनः कथमत्र भवन्तस्तादृशक्रान्तिं कुर्व्वन्ति?

राष्ट्र—सन्ति अवश्यम्। तथाऽपि तेषां न तत्र तादृशं बलं यथा तिलकादीनां प्रागासीत्। अथ च एते प्रतिष्ठाकाम्यन्तः सन्ति। प्रतिष्ठा चैतेषामस्माकमेव हस्ते वर्त्तते। यमिच्छेम; महात्मानं कुर्य्याम, यञ्चाऽभिलषेम; तं तुच्छं कुर्य्याम। द्रष्टव्यम्—एकदा गान्धिमहोदयेन कारागारमधिवसता 'सत्यार्थ प्रकाश'स्य प्रतिकूला समालोचनाऽक्रियत। तदाऽस्माभिरपि तत्कृतम्; येन तदा तस्य गान्धिमहोदस्य प्रभाव एव नष्टः। तदा 'काङ्ग्रेसं' कोऽपि नाद्रियते स्म। तस्मिन् समयेऽस्माभिर्हिन्दुसभैव प्रथिताऽक्रियत; तद्‌द्वारैव च विधवाविवाहादिप्रस्तावाः समर्थिता अक्रियन्त। तत एव गान्धिप्रभृतयोऽस्मत्सम्मतस्यैव मतस्य ※ प्रचारणेन प्रतिष्ठामाकलय्य अस्पृश्यतादिदूरीकरणे उद्युक्तास्तिष्ठन्ति। अस्माभिरपि पुनस्तदीयः प्रभावः प्रागिव वाद्धतः। गोवत्सस्य विषद्वारा घातनेन च याऽप्रतिष्ठा गान्धिमहोदयस्य भवद्भिः कृताऽऽसीद्; अस्माभिस्साऽपि जनैर्विस्मारिता। अत एव तेऽपि बाध्याःसन्तः स्वस्य सनातधर्म्मित्वं बहिर्बहूद्घोष्याऽप्यस्मत्सम्मतं धर्म्मविलोपमेव कर्तुं बद्धपरिकरास्सन्ति। अधुना भवन्तो भवद्धर्म्मश्च रात्रपुविलायं विलेष्यन्त एव। इति श्रेयम्।

धर्म—हा भगवन्! सनातनधर्म्म! शोच्योऽसि; यदेवं विध्वस्तप्राचीनताप्रसारे कलियुगप्रचारे, परित्रायतां हन्यमानस्तपस्वी धर्म्म इति बाहूत्क्षेपमाक्रन्दति त्वद्भक्तवृन्दे, धर्म्मव्याक्षेपनिषेधनियमं कृतवत्यपि वर्त्तमानशासने, त्वं साहसिकहतकैः स्वप्रबलप्रतिबलबलभूतैः प्रच्छन्ननास्तिकैः सुधारकनामधेयै राष्ट्रडिण्डिमवादिभिर्दरिद्राणप्राणोऽपहता वा क्रियसे। हा हन्त! निराश्रयोऽसि; भक्ताऽपेतोऽसि जातः। कमाक्रन्दामः, कं गत्वा कथयामः, कस्त्वां पुनः पुरेव प्रचारयिष्यति? निन्द निजप्राक्तनमुत्कर्षप्रकर्षम्, अनति-

※ अस्मत्सम्मतस्य। अत्र भूते क्तप्रत्ययस्तृतीयासमासश्चयोद्यः। 'मति बुद्धी'ति वर्त्तमानेक्ते तु 'क्तस्य च वर्त्तमाने' इति षष्ठी। 'क्तेन च पूजायाम्' इति समासनिषेधे 'अस्माकं सम्मतस्य' इति भवति।

क्रमणीया "अत्यारूढिर्भवति महतामप्यपभ्रंश-हेतुः" इत्युक्तिः ॥ हाहन्त सनातन-धर्म्मिजनते ! अश्रद्धाचितायां नास्तिकताबह्निना भस्मसात् सम्पद्य नामाऽवशेषङ्गते धर्म्मदेव त्वमपि न कथं तेनैव सह स्वाहुतिमकार्षीः स्वप्राणवल्लभविरहिता स्वमौनोपसेविमुखमुपदर्शयन्ती मन्तुमती भवती ( जनता ) कथं न जिह्रेति । किं लज्जा न विरुणद्धि त्वाम् । जडहृदये ! क्वनुताद्धृशं स्वाश्रयभूतं प्रियं पुनः प्राप्स्यसि । धिकृते प्रियधर्म्मविरहिताया जिजीविषाम् × ।

( प्रविश्य )

कलियुगम्—( राष्ट्रवादिनं प्रति ) साधु वत्स ! साधु । मदभिसन्धिर्भवता साधु बुद्धः । यदि यूयम् एवङ्कारं सामयिकतोपासका भविष्यथ; तदा द्रष्टव्यम्—प्रतिष्ठा युष्मान् वरयिष्यति; श्रीः शुश्रूषणाऽर्थमवसरं प्रतीक्षिष्यते, नेतृत्वं सुलभं भविष्यति । इमे धर्म्मवादिनश्च चीत्कुर्व्वन्तो जलबुद्बुदवत् स्वयमेव विलेष्यन्ते । ( इति तिरोहितम् )

धर्म्मवादी—( सोरस्ताडम् ) हाहन्त ! गतं धर्म्मेण, अस्तमाचारभानुना, विध्वस्तं प्राचीनतया । यदा साक्षात् कलिः किल दक्षिणहस्तो विद्यतेऽमीषां पामराणां नराणाम्; तदाऽस्माकं धर्म्मवादिनां का का दुर्गतिर्न भाविनो । परमात्मन् ! अन्तकाऽन्तिकं प्रहिणुवस्मान् ।

"हा कष्टं खलु वर्त्तते कलियुगे धन्या मृता ये नराः" भविष्यतस्तु विचारमात्रमेव कृत्वा विदीर्णं भवति नो हृदयम् । हन्त ! हन्त !! हन्त !!! ( इति मूर्च्छति )

राष्ट्रवादी—( मूर्च्छितं धर्म्मवादिनं सन्तोषदृष्ट्या पश्यति ) ।

अत्रान्तर एव बहवो राष्ट्रवादिनस्तारस्वरेण अवादिषुः—"महाराजकलियुगस्य जयो भवतु" "क्रान्तिश्चिरजीविनी स्तात्" ।

जयघोषणाकोलाहलसमयमेव मम निद्राभङ्गो जातः । दृष्टं—न तत्र राष्ट्रवादी आसीद्; न च धर्म्मवादी । अहन्तु स्वखट्वामधिशयितोऽस्मि । घरट्टानां शब्द एव कर्णं बधिरयति स्म; न जयघोषणानिनादः प्रातःकालो भवन्नासीत् । ततो विचित्रैतत्स्वप्नसमागमने विस्मेरो भवन्नहं नित्यकृत्यविधित्सया खट्वां पर्य्यजहामिति ।

———

× प० पद्मसिंहमहोदयीयस्यैकस्य गद्यांशस्याऽनुकरणमिदम् ।

# प्राप्तिस्वीकारः ।

## शाकद्वीपीयब्राह्मणबन्धोर्मासिकपत्रस्य साहित्याङ्कः ।

[illegible] पठनीयाः साहित्यसम्बन्धिनो लेखा विद्यन्ते । अस्याङ्कस्य सम्पादकः [illegible]शर्मा बी० ए० (सुजन) महोदयो लेखसङ्कलने, मुद्रण[illegible] [illegible]करणे, शुद्धतायाश्च नितान्तं मनोयोगमाहितवान् तस्मादेव [illegible]रोऽयं साहित्याङ्कः शाकद्वीपीयब्राह्मणानां तथान्येषामपि साहित्यसेविनां [illegible]स्थानमजनि । किं बहुना सर्वैरेव साहित्यरसिकैर्विशेषतः शाकद्वीपीय भूदेवैर्नूनमङ्कोऽयमादरणीयः । मूल्यमस्याङ्कस्य रूप्यकमेकम् । मासिकपत्रस्य च वार्षिकं मूल्यम् २॥) मात्रम् ।

प्राप्तिस्थानम्

व्यवस्थापक—'शाकद्वीपीय ब्राह्मणबन्धु कार्यालयः

१६ बी० बाबुलनाथ चाल, कमरा नं० ४२

चोपाटी बम्बई नं० ७ ।

———

छपरामण्डलान्तर्गत हथुआभिधानेनगरे श्रीछत्रधारि संस्कृत राजकीयविद्यालये वसन्तपञ्चम्यां श्रीसरस्वतीदेव्याः मूर्तिर्विरचय्य अध्यापकैः [illegible] श्रीपूज्यचरणारविन्द प्रधानाध्यापक शास्त्रिपदभूषित श्रीजान्हवीप्रसादमहोदयेनपूजनमकारि तत्पश्चात् तस्मिन्नहनि परममान्यमहन्थब्रजमोहनदासमहोदयस्य सभापतित्वे सनातनधर्मस्य सभासमपद्यत यस्याम्परिषदि राजपुरुषाः विशेषतः आगच्छन्तिस्म तत्र विद्यालयस्य प्रधानाध्यापकशास्त्रिमहोदयः मूर्त्तिपूजाविषये श्रुतिस्मृतिगीतादिविविधप्रमाणेन मूर्त्तौ ईश्वरस्यसत्ता दृढीकुर्वन् सुमनोरमं व्याख्यानमदात् ततः परस्मिन्दिने देव्यासह बाद्या[illegible]विधाने नगरकीर्त्तनं कृत्वा सरस्वती जलमज्जनम् गतेति—

गतवर्षेऽस्माकं महाराजबहादुर महोदयेन राजकुमारस्य जन्मो[illegible] सनातनधर्मस्य पताका गृहिता एवं बद्धपरिकरेण सनातनधर्मस्य रक्षा करिष्यामि इतिसत्यव्रतंकृतम् ततः अनिशमेन धर्मस्यसंस्था प्रचलति पर[illegible] येन प्रकारेण अन्येऽधर्मपालकाः ग्रामे[illegible] जनान् धर्मात् परिहरन्ति [illegible] सनातनधर्मस्य [illegible]सः परममान्या विद्यालयावकाशेसमये महाराजबहादुरमहोदयेन साहिता भवेयुः तर्हि धर्मप्रचारेऽतिसौकर्यं भवेत्—

श्रीरामराजत्रिपाठी ।

श्रीछत्रधारिसंस्कृतविद्यालय राजहथुआ

छपरामण्डलम्

———

Printed by Baldeo Datt Thaker and Published by A. P. Dwivedi
at the Bharat Dharma Press, Benares.